# चिकित्सानुशासनम्

## अथ प्रथमोऽध्यायः

अथ चिकित्सानुशासनम् ॥ १॥

ज्वरे ॥ २॥

लङ्घनमादौ हितम् ॥ ३॥

न क्षयानिलभयक्रोधकामशोकश्रमोद्भवे ॥ ४॥

बले क्षीणे ॥ ५॥

क्षुधि जातायां च ॥ ६॥

लघु भोजनं लङ्घनवत् ॥ ७॥

तिक्तं दोषपाचनम् ॥ ८॥

पिपासायामुष्णं जलं पेयम् ॥ ९॥

तिक्तकैः क्वथितं पित्तजे ॥ १०॥

तिक्तकानां शीतकषायो वा ॥ ११॥

पर्पटमुस्तोशीरचन्दनैः क्वथितमधिकायाम् ॥ १२॥

कफप्रधानैर्दोषैरामाशयोत्क्लेशे बलिनां वमनम् ॥ १३॥

वातपित्तयोस्त्रिवृता त्रिफलया वा विरेचनम् ॥ १४॥

लङ्घितैः सविश्वकृष्णासैन्धवधान्यकदाडिमा लाजपेया सेव्या ॥ १५॥

पित्ते सविश्वक्षौद्रा ॥ १६॥

शूले सगोक्षुरव्याघ्री ॥ १७॥

सबिल्व विश्वोत्पलधान्यकपृश्निपर्ण्यतिसारे ॥ १८॥

सविश्वपञ्चमूला हिक्काश्वासकासेषु ॥ १९॥

समहापञ्चमूला तण्डुलपेया कफे ॥ २०॥

पेयापानं षडहम् ॥ २१॥

न दाहच्छर्दिपीडितानाम् ॥ २२॥

बद्धे कफे ॥ २३॥

मद्यजे च ॥ २४॥

तेषु जम्बीररसविकृतस्य पयसोमस्तु शस्तं ॥ २५॥

अष्टमाद्दिनादारभ्य शमनप्रयोगः ॥ २६॥

दशमादित्येके ॥ २७॥

दोषपाकतोऽनन्तरमिति सर्वे ॥ २८॥

घनभुवनामृतादुरालभानां कषायो भेषजं वाते ॥ २९॥

कृष्णामूलभुवनामृतानां वा ॥ ३०॥

सकफे दशमूलस्य ॥ ३१॥

घनपर्पटकामृता विश्वानां सपित्ते ॥ ३२॥

घनपर्पटकभूनिम्बदुरालभानां पित्ते ॥ ३३॥

सकफेद्राक्षारोहिणी फलत्रयत्रायमाणानां ॥ ३४॥

वत्सकादेः कफे ॥ ३५॥

वत्सको मूर्वाभार्ङीमरिचमतिविषागण्डीरमेलापाठा पञ्चकोलकम्
अजगन्धाजीरकमजमोदा वचाकृमिघ्नं सिद्धार्थाश्चेति वत्सकादिः ॥ ३६॥

शट्यादेः सन्निपाते ॥ ३७॥

शटी पुष्करमूलं व्याघ्रीकुलीरशृङ्गी दुरालभा विश्वममृतापाठा भूनिम्बः कटुरोहिणी चेति शट्यादि ॥ ३८॥

रोहिणी कलिङ्गपटोलानां सन्तते ॥ ३९॥

रोहिणी शारिबा पटोलपाठा पयोदानां सन्तते ॥ ४०॥

वत्सकद्राक्षा निम्बाम्बुदत्रिफला पटोलानामन्येद्युवि ॥ ४१॥

भूनिम्बामृता चन्दनभुवनानां तृतीयके ॥ ४२॥

क्षौद्रयुक्तो धात्री घनामृतानां चातुर्थिके ॥ ४३॥

जीर्णे कृष्णादिघनाद्यमृतादिवा घृतम् ॥ ४४॥

कृष्णायवः शक्रयवो धावनी तिक्ता शारिबा धात्री तामलकी बिल्वं तोयदः सेव्यं द्राक्षाऽतिविषा स्थिरा च कल्कद्रव्याणीति कृष्णादि ॥ ४५॥

घनो बलाश्वदंष्ट्रा बृहती धावनी स्थिरा निम्बः पर्पटकस्त्रायमाणा दुरालभा च कषायद्रव्याणि द्राक्षा मेदा पुष्करमूलं धात्री च कल्कद्रव्याणि समं पयश्चेति घनादि ॥ ४६॥

कासक्षय शिरःशूलपार्श्वशूलां सतापेषु च ॥ ४७॥

अमृताय वासकस्त्रिफला वृषस्त्रायमाणा च कषायद्रव्याणि कृष्णा मुस्ता द्राक्षा चन्दनमुत्पलं नागरं च कल्कद्रव्याणि द्विगुणं पयश्चेत्यमृतादि ॥ ४८॥

दशमूलक्वथितं पयोऽकफे ॥ ४९॥

पलङ्कषा-निम्बपत्र-वचा-कुष्ठहरीतकी-सर्पिर्यवसर्षपैर्धूपः सर्वत्र सामान्यतः ॥ ५०॥

अन्तेऽभ्यङ्गपरिषेकाः ॥ ५१॥

## अथ द्वितीयोऽध्यायः

रक्तपित्ते ॥ १॥

ऊर्ध्वगे कृष्णापादया समसितया त्रिवृता विरेकः ॥ २॥

वमनमधोगे ससितामधुना मदनेन ॥ ३॥

न दुर्बलस्य ॥ ४॥

ऊर्ध्वगे तिक्तकषायोपवासाः ॥ ५॥

अन्यत्र बृंहणं मधुरैः ॥ ६॥

मुद्गलाजघनकणोशीरचन्दनानां बलाजलोषितानां कषायः सर्वत्र भेषजम् ॥ ७॥

शतावर्याः सक्षौद्रं घृतम् ॥ ८॥

पलाशवृन्तानां वा ॥ ९॥

वृषस्य विशेषेण ॥ १०॥

गोक्षुराभीरुपर्णिनीभिः क्वथितं पयोमूत्रमार्गगे ॥ ११॥

पायुगे रम्भारसेन ॥ १२॥

सक्षौद्रं पारावत शकृत्ग्रथिते रक्ते ॥ १३॥

उत्पलनालक्षीरं सघृतमाक्षिकं कण्ठमार्गगे ॥ १४॥

सर्वत्र लघुशीतं भेषजम् ॥ १५॥

## अथ तृतीयोऽध्यायः

कासे ॥ १॥

वातजे स्वेदः ॥ २॥

पित्तजे शीताः पेयाः ॥ ३॥

कफजे स्नेहविरेचनम् ॥ ४॥

विदार्यादि वीरादि गोक्षुरामलकादि वा घृतं भेषजम् ॥ ५॥

विदारी बर्षा भूरेरण्डो देवदारुः शूर्पपर्णो मेषशृङ्गी दुरालभा शारिबा त्रिपादी जीवनह्रस्वपञ्चमूले च कषायद्रव्याणि पयश्चेति विदार्यादि ॥ ६॥

गुल्मोर्ध्वश्वासप्रमेहेषु च ॥ ७॥

वीरा जीवन्ती काकोल्यौ मेदे मुद्गपर्णी माषपर्णी जीवकर्षभकौ मधुकं विश्वं शतावरी पुनर्नवाबलाभार्ङ्गी दुरालभा तामलकी कृष्णा पयस्या ह्रस्वपञ्चमूलं द्राक्षा च कर्षांशाः कल्कद्रव्याणि धात्री विदारीक्षुरसपयांसि पाकद्रव्याणि प्रस्थार्धं मधु तुलार्धं शर्कराकर्षद्वयांशानि मरिचं त्वगेलापत्रं केसरं च योगद्रव्याणीति वीरादि ॥ ८॥

शुक्रनाशबलक्षयश्वासहिध्मा तृष्णादाहास्रपित्तच्छर्दिमूर्छा हृद्रोग-योन्यामयक्षयप्रमेहेषु च ॥ ९॥

गोक्षुरमुशीरं मञ्जिष्ठा बलाकाश्मर्यं कत्तृणं दर्भमूलं पृथक् पर्णी स्थिरा च पालिकानि रसद्रव्याणि क्षीरं चतुर्गुणं स्वगुप्ता मेधाकरी मेदाजीवन्ती जीवकर्षभकौ द्राक्षा शतावरी श्रावणी मृणालं च कल्कद्रव्याणि कार्षिकाणीति गोक्षुरादि ॥ १०॥

मूत्रकृच्छ्रपायुजदौर्बल्यक्षयप्रमेहेषु च ॥ ११॥

आमलकं विदारीक्षुर्जीवन्ती शतावरी च रसद्रव्याणि गव्यमाजं पयश्च तुल्ये शर्कराक्षौद्रं च योगद्रव्य इत्यामलकादि ॥ १२॥

शुक्रनाशरक्तपित्तापस्मारक्षयप्रमेहेषु च ॥ १३॥

क्षीरं विना विदार्यादि कषायश्च विदार्यादिघृतवत् ॥ १४॥

अश्वगन्धादि कल्कसिद्धं नागबलाघृतं क्षयप्रमेहयोश्च ॥ १५॥

अश्वगन्धा बलाऽतिबलायष्टिः पुनर्नवाप्रपौण्डरीकं काश्मर्यं दुरालभा-ऽभीरुर्मेदे त्रिकण्टकं काकोल्यौ विदार्यौ चेत्यश्वगन्धादिः ॥ १६॥

व्योषादिकल्कसिद्धं कण्टकारीघृतम् ॥ १७॥

व्योषं बलाविडङ्गः शटी दाडिमं सौवर्चलं धात्री बृहती पथ्या यवानी चित्रकं द्राक्षाचव्यं वर्षाभूर्दुरालभाऽम्लवेतसं शृङ्गी तामलकीरास्ना गोक्षुरकं चेति व्योषादिः ॥ १८॥

व्याघ्री पीयूषयोर्घृतं वातजे ॥ १९॥

पित्तजे मधुकद्राक्षयोः सक्षौद्रशर्करम् ॥ २०॥

कफजे सक्षौद्रो मरिचकल्कः ॥ २१॥

कृष्णा तन्मूलविभीतकार्द्रकलहो वा ॥ २२॥

क्षयक्षतजयोर्बृंहणम् ॥ २३॥

सर्वत्र त्रिजातादि घुटिका ॥ २४॥

कर्षार्घांशमेकैकं त्रिजाते कृष्णापलार्धांशा शर्करा मधुकखर्जूरद्राक्षाः पलद्वयांशाः प्रत्येकं क्षौद्रं मर्दनद्रव्यमिति त्रिजातादि ॥ २५॥

भोजनमस्त्र पित्तवत् ॥ २६॥

## अथ चतुर्थोऽध्यायः

श्वासहिध्मयोः ॥ १॥

आदौ स्वेदः ॥ २॥

ततो वमनं मृदु ॥ ३॥

आनाहोदावर्ततमकेषु कोष्णं विरेचनम् ॥ ४॥

अशान्तौ मनःशिलादि धूमः ॥ ५॥

मनःशिला हरिद्रापत्त्रमेरण्डमूलं घृतं द्राक्षादेवदारुर्मांसी चेति मनःशिलादि ॥ ६॥

क्षयक्षतातिसार रक्तपित्तदाहानुबन्धजयोः स्निग्धशीतं भेषजम् ॥ ७॥

दशमूलपेयाऽन्यत्र ॥ ८॥

शिरीषपुष्परसः समधुकणः ॥ ९॥

कृष्णामूलमधुकगुडगोशकृद्रसाः समधुकणाः ॥ १०॥

चण्डावालकषौष्करभार्ङ्गी तामलकी शटीकल्कः शर्कराष्टगुणः ॥ ११॥

गुडनागरे ॥ १२॥

कासोक्तमपि ॥ १३॥

वातानुलोमनं भोजनमुष्णम् ॥ १४॥

**अथ पञ्चमोऽध्यायः**

यक्ष्मणि ॥ १॥

स्निग्धस्विन्नस्य सफलेन पयसा वमनम् ॥ २॥

समधुसर्पिः सितया त्रिवृता विरेचनम् ॥ ३॥

द्राक्षाविदारी रसयुतयावा ॥ ४॥

आजं क्षीरं भेषजम् ॥ ५॥

घृतं मांसं वा ॥ ६॥

युक्त्याद्राक्षासवः ॥ ७॥

पयोदशमूलाम्बुसिद्धं बलागर्भं घृतम् ॥ ८॥

द्राक्षादिकल्कसिद्धम् ॥ ९॥

द्राक्षाजीवन्ती मधुकं कुटजफलानि कृष्णा पुष्करं व्याघ्री गोक्षुरकं बलातामलकी त्रायमाणा दुरालभा नीलोत्पलं चेति द्राक्षादिः ॥ १०॥

फलादि ॥ ११॥

एला त्रिफलाऽजमोदा सौराष्ट्री चित्रकं व्योषं भल्लातकं कृमिघ्नं गायत्री सालबीजकारिष्टानां साराश्च कषायद्रव्याणि त्रिफलं त्रिजातं षट्पला-तवक्षीरी त्रिंशत्पलासिता द्विगुणं मधु च योगद्रव्याणीत्येलादि ॥ १२॥

बृंहणदीपनं सामान्यतः ॥ १३॥

पञ्चमूलपञ्चकरसक्षीरसिद्धं घृतमुपद्रव्येषु ॥ १४॥

लघुशीतं भोजनम् ॥ १५॥

## अथ षष्ठोऽध्यायः

छर्दने ॥१॥

लङ्घनमवाते ॥२॥

प्रततं प्रवृत्ते वमनम् ॥३॥

हृद्यैस्ततो विरेकः ॥४॥

सधात्रीरसो मुद्गदलशीतकषायो भेषजम् ॥५॥

सक्षौद्रा पथ्या ॥६॥

द्राक्षा वा ॥७॥

जम्बाम्रपल्लवोशीरवटशृङ्गावरोहकषायः ॥८॥

ससैन्धवं घृतं वातजे ॥९॥

दाडिमाम्बुसिद्धं वा ॥१०॥

समधुशर्करालाजपेया पित्तजे ॥११॥

कफजे सव्योषं कपित्थम् ॥१२॥

सक्षौद्रा दुरालभा ॥ १३ ॥

सर्वत्र स्तम्भनबृंहणं सामान्यतः ॥ १४ ॥

## अथ सप्तमोऽध्यायः

हृद्रोगे ॥ १ ॥

पथ्या सौवर्चलसिद्धं घृतं भेषजम् ॥ २ ॥

बलादितैलम् ॥ ३ ॥

बला षड्गुणा दशमूलं कुलुत्थाश्च कषायद्रव्याणि पयोबलाकषायसमं त्रिफला सुगन्धिस्तगरं मधुकमगवाजिगन्धा कृष्णा चन्दनं सैन्धवं कुष्ठं त्रिजातं देवदारुः शतावरी विदारी शूर्पपर्णी लाक्षाशिलाजं पुनर्नवा च कल्कद्रव्याणीति बलादि ॥ ४ ॥

वातजे स्निग्धाः पेयाः ॥ ५ ॥

अनुलोमनानि घृतानि ॥॥ ६ ॥

श्रेयसी सिद्धं सक्षीरं महिषीघृतं पित्तजे ॥ ७ ॥

कफजे गिरिजम् ॥ ८ ॥

दधि गुडक्षीराणि वर्ज्यान्यवाते ॥ ९॥

शूले मूलैर्विरेकः ॥ १०॥

परिणामजे स्नेहैः ॥ ११॥

पाकमध्यजे फलैः ॥ १२॥

वातानुलोमनं भेषजम् ॥ १३॥

भुक्तिजेदार्वति विषाकुष्ठकृमिघ्नतिल्वकलवणान्युष्णाम्बुना ॥ १४॥

## अथाष्टमोऽध्यायः

तृष्णायाम् ॥ १॥

वातपित्तघ्नं भेषजम् ॥ २॥

शीताः पेयाः ॥ ३॥

सशर्करं लघुपञ्चमूलजलम् ॥ ४॥

वातजायां सगुडं दधि ॥ ५॥

पित्तजायां यष्टिकुशकाशानाम् ॥ ६॥

कफजायां निशायाः सितामधुभ्याम् ॥ ७॥

श्रमजायां ससितमम्बु ॥ ८॥

आतपजायां प्रसेकः ॥ ९॥

अन्नात्ययजायां शीतोमन्थः ॥ १०॥

क्षयजायां बृंहणम् ॥ ११॥

सोर्ध्ववातायां शीतैः क्वथितं क्षीरम् ॥ १२॥

सर्वत्र विदार्यादिजलम् ॥ १३॥

## अथ नवमोऽध्यायः

अर्शःसु ॥ १॥

नृकेशसर्पकञ्चुकशमीपत्रार्कमूलमार्जालचर्मसर्पिषां धूपः ॥ २॥

पृथक् पृथगश्वगन्धाबृहतीकृष्णासुरसानाम् ॥ ३॥

स्नुक् क्षीरार्द्रया निशया लेपः ॥ ४॥

सार्कसुधाक्षीरेण कुष्ठपिप्पलीगुडसैन्धवशिरीषबीज त्रिफला-

कल्केन ॥ ५॥

लेपनद्रव्यसिद्धेन तैलेनाभ्यङ्गः ॥ ६॥

ससैन्धवं तक्रं भेषजम् ॥ ७॥

सकोविदारमूलकल्कम् ॥ ८॥

सकुटजत्वक्पथ्याग्निवेल्लम् ॥ ९॥

सहिङ्गुहपुषा चित्रकं च ॥ १०॥

पाठासदुःस्पर्शा ॥ ११॥

सबिल्वाससागरासयवानी वा ॥ १२॥

पाठादिघृतम् ॥ १३॥

पाठाऽजमोदा धान्यकं गोक्षुरकं पञ्चकोलं बिल्वं च कल्कद्रव्याणि चतुर्गुणा चाङ्गेरीरसद्रव्यं तत्तुल्यं दधि चेति पाठादि ॥ १४॥

ग्राहणी प्रवाहिका मूत्रकृच्छ्रेषु च ॥ १५॥

पुटपक्वः सतैललवणः सूरणः ॥ १६॥

रक्तजेषु कफानुबन्धे रूक्षशीतम् ॥ १७॥

स्निग्धशीतमन्यदा ॥ १८ ॥

सर्वत्र सकालशेयं लघुदीपनं भोजनम् ॥ १९ ॥

## अथ दशमोऽध्यायः

अतिसारे ॥ १ ॥

लङ्घनम् ॥ २ ॥

वमनं शूलानाह प्रसेकार्तानाम् ॥ ३ ॥

कुटजो भेषजम् ॥ ४ ॥

नागरादिघृतम् ॥ ५ ॥

नागरं लाक्षा कृष्णा कटुकरोहिणी च कल्कद्रव्याणि शक्रयवाः कषायद्रव्यमिति नागरादि ॥ ६ ॥

यवान्यादिः कल्कः ॥ ७ ॥

यवानी कृष्णामूलं नागरं चातुर्जातं मरिचं जीरकं धान्यकं सौवर्चलं च तुल्यानि कृष्णाधातकी वृक्षाम्लं बिल्वं दाडिमं दीप्यकं च त्रिगुणानि कपित्थमष्टगुणं शर्करा सर्वाधिकेति यवान्यादिः ॥ ८ ॥

4

तवक्षीर्यादिर्वा ॥ ९॥

कर्षांशा तवक्षीरी द्विकर्षांशं चातुर्जातं यवानी धान्यकमजाजीग्रन्थि व्योषं च पालिकानिपलाष्टकांशे दाडिमं सिता चेति तवक्षीर्यादिः ॥ १०॥

बालबिल्बगुडतैलकृष्णा विश्वानि शूले ॥ ११॥

रक्तस्त्रावे सितापादः कृष्णातिलकल्कः पयसाऽऽजेन ॥ १२॥

सिता चन्दने तण्डुलाम्बु क्षौद्रभ्यां वा ॥ १३॥

बद्धे दोषे पथ्या ॥ १४॥

बालबिल्वं जठरोत्क्लेशे ॥ १५॥

कृष्णा वा मधुना ॥ १६॥

## अथैकादशोऽध्यायः

ग्रहण्याम् ॥ १॥

शुद्धिरतिसारवत् ॥ २॥

दीपिन्यः पेयाः ॥ ३॥

विश्वातिविषाधनानां क्वाथो भेषजम् ॥ ४॥

कल्को वा सुखाम्बुना ॥ ५॥

विश्वस्य पथ्याया वा ॥ ६॥

पटोलादिर्मधुना ॥ ७॥

पटोलं निम्बस्त्रायन्ती किराततिक्तः पर्पटकं शक्रयवो मूर्वा निशात्वक्पद्मकमुशीरं यवानी चन्दनं सौराष्ट्रमतिविषा त्रिजातं तोयदो वचा देवदारुश्चेति पटोलादिः ॥ ८॥

बीजपूरकरससिद्धं घृतं वातजायाम् ॥ ९॥

पित्तजायां चन्दनादि ॥ १०॥

चन्दनं पद्मकमुशीरं पाठा मूर्वा शारिबा पटोलं रोहिणी कटुका मूस्ता निम्बश्च कषायद्रव्याणि किराततिक्तः शक्रयवाः कृष्णायवानी नीलोत्पलं च कल्कद्रव्याणीति चन्दनादि ॥ ११॥

कफजायां पञ्चकोलादिकल्को घृतेन ॥ १२॥

पञ्चकोलं पटुपञ्चकं हिङ्गुकिराततिक्तो वचा पाठा गोक्षुरकमिन्द्रयवाश्चेति पञ्चकोलादिः ॥ १३॥

सर्वत्र स्निग्धदीपनम् ॥ १४॥

भोजनं च ॥ १५॥

## अथ द्वादशोऽध्यायः

मूत्राघाते ॥१॥

वातजे स्नेहस्वेदौ ॥२॥

पित्तजे प्रलेपपरिषेकाः ॥३॥

कफजे वमनस्वेदौ ॥४॥

बृहत्यादि घृतं भेषजम् ॥५॥

बृहत्या वंशुमत्यावष्टगुणं गोक्षुरं च कषायद्रव्याणीति बृहत्यादि ॥६॥

मूर्वाघनदारुयष्टिमधुपथ्याः ॥७॥

वातजे ससौवर्चला मदिरा ॥८॥

एर्वारुबीज निशायष्टयस्तण्डुलाम्बुना पित्तजे ॥९॥

वरीविदारीवीरागोक्षुरतृणपञ्चमूलानां कषायः ॥१०॥

शीतो द्राक्षायाः ॥११॥

कफजे करञ्जबीजकल्कस्तक्रेण ॥१२॥

शिग्रुमूलक्वाथः कोष्णोऽश्मर्याम् ॥ १३॥

कण्टकत्रय बीजरजः ॥ १४॥

पाषाणभेदकादिघृतं वातजायाम् ॥ १५॥

पाषाणभेदको वसुकोवशिरोऽश्मन्तको वृक्षादनीशाकफलमुशीरं कतकं भल्लातकोऽतिबला वरुणस्त्रिकण्टकं गुण्ठः शतावरी यवाः कुलुत्थाः शक्रयवाः पञ्चकोलं च कषायद्रव्याणीति पाषाणभेदकादि ॥ १६॥

कुशादि पित्तजायाम् ॥ १७॥

कुशः काशः शरोगुण्ठो मोरटोऽश्मभिद्दर्भोविदारी वाराही शालिमूलं त्रिण्टकं पाटली पाठा भल्लुकः पुनर्नवा कुरण्टकः शिरीषश्च कषाय-द्रव्याणि मधुकं शिलाजमिन्दीवरं च कल्कद्रव्याणीति कुशादि ॥ १८॥

कफजायां वरुणादि ॥ १९॥

वरुणो विदार्यादयो देवदारुर्गुग्गुलुर्मरिचं कुष्ठं चित्रकं च कल्कद्रव्याणीति वरुणादि ॥ २०॥

दूषितशुक्रायां वृष्यम् ॥ २१॥

प्रवृद्धायां शस्त्रप्रक्रिया ॥ २२॥

## अथ त्रयोदशोऽध्यायः

प्रमेहे ॥१॥

स्निग्धस्य वमनरेचने ॥२॥

समधु धात्रीरसा निशा भेषजम् ॥३॥

गुडूचीरसः सक्षौद्रः ॥४॥

त्रिकण्टकादितैलम् ॥५॥

घृतं च ॥६॥

त्रिकण्टकं निशारोध्रं वचाऽर्जुनः सोमवल्कः पद्मकमश्मन्तकश्चन्दन-मगरुदीप्यकं पटोलं मञ्जिष्ठा मुस्तामाद्री भल्लातकश्च कल्कद्रव्याणीति त्रिकण्टकादि ॥७॥

दशमूलादिघृतम् ॥८॥

दशमूलं शटी दन्ती देवदारुः पुनर्नवा पथ्या भल्लातको भूकदम्बो वरुणः करञ्जं स्नुगर्क पुष्करपिप्पलीमूलानि दशपलांशानि प्रस्थांशा यवकोलकुलुत्थाः प्रत्येकं कषायद्रव्याणि पिप्पलीद्वयं चव्यं वचानिचुलो रोहिणी बिल्वं भार्ङ्गी च कल्कद्रव्याणि पयश्चेति दशमूलादि ॥९॥

स्निग्धशीतं भोजनम् ॥१०॥

## अथ चतुर्दशोऽध्यायः

गुल्मे ॥ १॥

स्नेहस्वेदौ ॥ २॥

वस्तयो विशेषेण ॥ ३॥

वचादिः कल्को भेषजम् ॥ ४॥

वचा विजया पशुगन्धा हिङ्गु दाडिमं दीप्यकं धान्यकं पाठा पुष्करमूलं शटी हपुषा वह्निः पटुपञ्चकं कटुत्रयं चव्यमजाजी चेति वचादिः ॥ ५॥

सैन्धवादिर्बिडादिर्वा ॥ ६॥

सैन्धवं यवानी दीप्यकं कृष्णा नागरं च क्रमवृद्धांशानि सर्वसमा-हरीतकीति सैन्धवादिः ॥ ७॥

बिडोऽजाजी हिङ्गूग्रा विजया वाट्यभिधानं कुष्ठं कुम्भमूलं निकुम्भमूलं च क्रमवृद्धांशानि बिडादिः ॥ ८॥

दध्यादिघृतम् ॥ ९॥

दधि चतुर्गुणं दाडिममाम्रातकं मातुलुङ्गं च रसद्रव्याणि बला कालासुषवी दशमूलं पुनर्नवा पूष्करमूलं रास्ना भार्ङ्गी गुडूची शटी वाजिगन्धा च द्विपलांशाः कषायद्रव्याणि तुम्बुरुर्ग्रन्थिः षड्ग्रन्था रास्ना वह्निर्धान्यकं

यवानी जीरकमम्लवेतसं हिङ्गु हपुषा निकुम्भः कुम्भो मूर्वा गजपिप्पली डाडिममजाजी वेल्लं गोक्षुरकं पाषाणभेदकस्त्रपुसमेर्वारुबीजानि पटुपञ्चकं कटुत्रयं शारिबाच- कल्कद्रव्याणीति दध्यादि ॥ १० ॥

नीलिन्यादि वा ॥ ११ ॥

नीलिनी त्रिफला रास्ना बला कटुरोहिणी व्याघ्री विडङ्गं च पालिकानि कषायद्रव्याणि तुल्यं दधि चेति नीलिन्यादि ॥ १२ ॥

लशुनादि वातजे ॥ १३ ॥

लशुनकन्दानां तुला पृथक्पृथक् पञ्चपलांशं महत्पञ्चमूलं च कषाय- द्रव्याणि फलत्रयं कटुत्रयं हिङ्गु यवानी चव्यं दीप्यकं देवदारुरम्ल- वेतसं सैन्धवं च कल्कद्रव्याणि दाडिमं रसद्रव्यं दधि सुरा चेति लशुनादि ॥ १४ ॥

हपुषादि ॥ १५ ॥

हपुषा व्योषं पृथ्वीका पञ्चकोलकं दीप्यकं सैन्धवमजाजी च कल्क- द्रव्याणि दाडिमं मूलकं च रसद्रव्ये दधिपयश्चेति हपुषादि ॥ १६ ॥

हिङ्ग्वादि शूलानाहयोः ॥ १७ ॥

हिङ्गु सौवर्चलं व्योषं विडङ्गं दाडिमं दीप्यकं पुष्करमूलमजाजी धान्यकमम्लवेतसं क्षारं वह्निः शटी वचा वाजिगन्धा सुरसैला च कल्कद्रव्याणि दधि चेति हिङ्ग्वादि ॥ १८ ॥

भल्लातकादि कफजे ॥ १९॥

भल्लातकं पञ्चमूलं च कषायद्र.व्याणि विडङ्गं हङ्गु सैन्धवं शटी बिडो व्याघ्री रास्ना यष्टिर्नागरं च कल्कद्रव्याणि पयश्चेति भल्लातकादि ॥ २०॥

मधुक द्राक्षा चन्दनपयस्या मधुपद्मकानि तण्डुलाम्बुना पित्तजे ॥ २१॥

त्रायमाणा कषायः पयसा ॥ २२॥

स्रंसनमन्यच्च ॥ २३॥

सभार्ङ्गी घृतगुडव्योषस्तिलक्वाथो रक्तजे विरिक्तायाः ॥ २४॥

पलाशक्षारसिद्धो मिश्रको वा ॥ २५॥

लघुदीपनं भोजनम् ॥ २६॥

## अथ पञ्चदशोऽध्यायः

उदरे ॥ १॥

स्निग्धं विरेचनम् ॥ २॥

धान्यकादिः कल्को भेषजम् ॥ ३॥

धान्यकं यवानी हपुषा शतपुष्पोपकुञ्चिका कारवी कृष्णामूलमज-गन्धा शटी वचा वह्निरजाजी स्वर्णक्षीरी लवणपञ्चकं फलत्रयं कटुत्रयं पुष्करमूलं कुष्ठं क्षारद्वयं विडङ्गं चैकांशानि त्रिवृद्विशाला च द्विभागे दन्ती त्रिभागा सातला चतुर्भागेति धान्यकादिः ॥ ४॥

नारायणो नामान्तरेण ॥ ५॥

सर्वत्र च यथा रोगानुपानः ॥ ६॥

सातलादिः ॥ ७॥

सातला हपुषा नीलिनी त्रिफला स्वर्णक्षीरी त्रायन्ती रोहिणी त्रायमाणा तिक्ता वचा काललवणं सैन्धवं कृष्णा चेति सातलादिः ॥ ८॥

नीलिनी निचुलाग्नि व्योषलवणक्षाराणाम् ॥ ९॥

सनागरत्रिफला मस्तु सिद्धो मिश्रकः ॥ १०॥

आवृतदोषाणामेरण्डतैलम् ॥ ११॥

स्नेहनरेचनं सामान्यतः ॥ १२॥

स्निग्धोष्णं भेषजम् ॥ १३॥

## अथ षोडशोऽध्यायः

पाण्डौ ॥ १ ॥

स्निग्धस्य वमनम् ॥ २ ॥

भूयः स्निग्धस्य विरेकः ॥ ३ ॥

अयो भेषजम् ॥ ४ ॥

माण्डूरादि घुटिकातक्रेण ॥ ५ ॥

सर्वद्रव्येभ्यो द्विगुणं माण्डूरं ताप्यं दार्वी त्वक् चव्यं ग्रन्थिकं देवदारु-र्वक्ष्यमाणं व्योषादि नवकं च गोमूत्रं मर्दनद्रव्यमिति माण्डूरादिः ॥ ६ ॥

व्योषफलत्रयाग्नि वेल्लघनकल्कः समलोहः ॥ ७ ॥

लोहपात्रोषिता लोहादिघुटिका ॥ ८ ॥

लोहो गिरिजं स्वर्णमाक्षिकं रजतमाक्षिकं च पञ्चांशानि व्योषत्रिफला विडङ्गचित्रकाण्येकांशानि शर्कराऽष्टांशा मधुमर्दनद्रव्यमिति लोहादिः ॥ ९ ॥

योगराजो नामान्तरेण ॥ १० ॥

क्षयप्रमेहकासार्तवदोषेषु च ॥ ११ ॥

गिरिजादि घुटिका ॥ १२॥

गिरिजं षोडशांशं चातुर्जातं तालीसपत्रं चाष्टांशानि तैलं घृतं मधु शर्करा च पञ्चांशाः कुलीरश्रृङ्गी धात्री व्योषं च चतुरांशानि विदारी नेत्रांशा तवक्षीर्येकांशा च कल्कद्रव्याणि त्रिफलाऽमृता बला कुलीरश्रृङ्गी यष्टिर्दशमूलं पुष्कररास्ना यावककाकोली मेदातोदय वीरा विदारी शतावरी जीरक कृष्णा मधुक निकुम्भ पाठांशुमती चव्यभुवनानि च पाक्यानि धेनुदुग्धं च मर्दनद्रव्याणीति गिरिजादिः ॥ १३॥

शिवा नामान्तरेण॥ १४॥

सर्वत्र च यथा रोगानुपानम् ॥ १५॥

कणा पिश्वतवक्षीरी सिता मधुकद्राक्षा धात्री रसलेहः ॥ १६॥

वृषामृता कट्वी फलत्रय निम्बभूनिम्बक्वाथो मधुना ॥ १७॥

मृज्जे बिल्वादि घृतम् ॥ १८॥

बिल्वं निशाद्वयं पुनर्नवे त्रिफला व्योषं तोयदः पाठा देवदारुर्विडङ्गं भार्ङ्गी वृश्चिकाली च कषायद्रव्याणि कल्कद्रव्यमयः पयश्चेति बिल्वादि ॥ १९॥

कामलायामारग्वधः सेक्षुरसो भेषजम् ॥ २०॥

पथ्या शतक्वाथ सिद्धं घृतं वा ॥ २१॥

## अथ सप्तदशोऽध्यायः

कुष्ठश्वित्रयोः ॥ १ ॥

विरेकः ॥ २ ॥

वृषादि घृतं भेषजम् ॥ ३ ॥

वृषोऽमृता निम्बस्त्रिफला पटोलं व्याघ्री करञ्जद्वयं च कषायद्रव्याणि तान्येव कल्कद्रव्याणीति वृषादि ॥ ४ ॥

विसर्पकामला रक्तपित्तेषु च ॥ ५॥

वरादि ॥ ६ ॥

वरा व्योषं बृहत्यौ कटुका निकुम्भः कुम्भो राजवृक्षः पाठावह्नि- र्वचाऽतिविषा नवं स्नुही क्षीरं च कल्कद्रव्याणीति वरादि ॥ ७ ॥

वृद्धिगुल्माश्मरीषु च ॥ ८ ॥

निम्बादि ॥ ९ ॥

निम्बः पटोलं कटुका दार्वी पाठा दुरालभा पर्पटकस्त्रायमाणा च कषायद्रव्याणि त्रायन्ती तोयदः किराततिक्तः कलिङ्गकः कणा चन्दनं च कल्कद्रव्याणीति निम्बादि ॥ १० ॥

सर्वपित्त पित्तशोफ विसर्प कण्डुगण्ड व्रणापची दुष्टनाडी पाण्डुकामला विस्फोटविद्रधि गुल्म हृद्रोग रक्तपित्त भगन्दरो दरापस्मारार्शःसु च ॥ ११ ॥

सप्तच्छदादि निम्बादिवधिकगुणं वा ॥ १२ ॥

सप्तच्छदः पर्पटकः श्यामाकः कटुका वचावरा पद्मकं पाठा शारिबा कृष्णे निम्बश्चन्दनं यष्टिर्विशाला शक्रयवोऽमृता किराततिक्तः सेव्यं वृपो मूर्वा शतावरी पटोलमतिविषा मुस्ता त्रायन्ती दुरालभा च कषायद्रव्याणि धात्री रसद्रव्यमिति सप्तच्छदादि ॥ १३ ॥

भल्लातकादिना लेपः ॥ १४ ॥

भल्लातकं द्वीपी सुधाऽर्कमूलं गुञ्जाफलं व्योषं शङ्खचूर्णं तुत्थं कुष्ठं लवणपञ्चकं क्षारद्वयं लाङ्गलिका च स्नुगर्कक्षीरयोः पाचयितव्या इति भल्लातकादिः ॥ १५ ॥

उत्तरे द्वीपिनो दग्धचर्मणा सतैलेन ॥ १६ ॥

द्विपस्य वा ॥ १७ ॥

हरिताल मनःशिला चित्रक गुञ्जापत्रा वल्गुजानां वा ॥ १८ ॥

भल्लातका वल्गुज निम्बबीज तैलानां वा ॥ १९ ॥

मयूरपित्तम् ॥ २० ॥

अवल्गुजरजः खदिरामलककषायेण ॥ २१॥

भृङ्गा वल्गुज तुम्बपत्रकल्कः ॥ २२॥

रक्तमोक्षण विरूक्षण सक्तुभक्षणानि ॥ २३॥

उभयत्र देवताराधनं परमम् ॥ २४॥

## अथाष्टादशोऽध्यायः

वाते ॥ १॥

स्नेहस्वेदौ ॥ २॥

मृदून्यनुवासनानि ॥ ३॥

बलादितैलं भेषजम् ॥ ४॥

लाक्षादि ॥ ५॥

सर्वसमा लाक्षा हस्तिकर्णी वाजिगन्धा दशमूलं बला शतावरी भद्रमुस्ता च कषायद्रव्याणि यष्टिर्देवदारुश्चन्दनं रास्ना सौराष्ट्री कौन्ती मञ्जिष्ठा तक्कोलं कटुरोहिणी चातुर्जातं ह्रीबरं सरलं नतं च कल्कद्रव्याणि चतुर्गुणे दधिमस्तु पयश्चेति लाक्षादि ॥ ६॥

प्रायः सर्वत्र यथारोगयोगम् ॥ ७॥

लेपोपयोगि चेदम् ॥ ८॥

देवदारु नागर कल्कसिद्धेन लज्जालुरसपक्वेन तैलेन लेपः ॥ ९॥

बिल्वबलापयःसिद्धं सर्पिर्नस्यं शीर्षस्थे ॥ १०॥

काञ्जिकशीतं लशुनमावृते ॥ ११॥

वीरा विडङ्गाग्नि व्योषघनतुल्यः शुद्धो गुग्गुलुरुरुस्तम्भे ॥ १२॥

वातशोणिते क्षीरवस्तयः ॥ १३॥

स्निग्धस्य विरेचनम् ॥ १४॥

अमृताघृतं भेषजम् ॥ १५॥

कोकिलाक्ष क्वाथः ॥ १६॥

वचापञ्चमूलजलेन ॥ १७॥

धात्रीरसेन वा ॥ १८॥

स्वाद्वम्लूलवणोष्णं भोजनम् ॥ १९॥

## अथैकोनविंशोऽध्यायः

मदात्यये भूयो युक्तिपीतं मद्यं भेषजम् ॥ १॥

वातपित्तघ्नं सामान्यतः ॥ २॥

विद्रधौ रक्तमोक्षणम् ॥ ३॥

पक्वे व्रणवत्प्रक्रिया ॥ ४॥

त्रायन्ती निम्बमधुकरोहिणी त्रिफलानामाष्टगुणमसूराणां क्वाथः सघृतो भेषजम् ॥ ५॥

मुस्तादि सिद्धं त्रिवृतो घृतम् ॥ ६॥

मुस्ता तामलकी त्रायन्ती धन्वयासस्तिक्ता वीरा जीवन्ती चन्दनमुत्पलं च कल्कद्रव्याणि धात्रीरसद्रव्यं पयश्चेति मुस्तादिः ॥ ७॥

खर्जूरादि ॥ ८॥

खर्जूरं विदारी शतावरी द्राक्षा यष्टिस्त्रिफला परूषकं च कषायद्रव्याणि हरीतकी कल्कद्रव्यं पय इक्षुधात्रीरसौ चेति खर्जूरादि ॥ ९॥

दाहतृण्मूर्छा हृद्रोगरक्तपित्तेषु च ॥ १०॥

5 परमं हृद्यम् ॥ ११॥

विसर्पे लङ्घनरूक्षणम् ॥ १२॥

यष्टिकषायः ॥ १३॥

तद्गन्धलेपश्च ॥ १४॥

वृद्धौ स्वेदः ॥ १५॥

पुनर्नवादिघृतं भेषजम् ॥ १६॥

तुलांशा पुनर्नवा दशमूलं पयस्या शतावरी दर्भमूलमिक्षुमूलमेरण्डः काशः शरोनलश्च दशपलांशाः कषायद्रव्याणि कृष्णा कृष्णामूलं सैन्धवं द्राक्षा यवानी नागरं यष्टिश्च द्विपलांशाः कल्कद्रव्याणि त्रिंशत्पलांशो गुडो योग द्रव्यमेरण्ड तैलमर्धांशं तुल्यं पयश्चेति पुनर्नवादि ॥ १७॥

गुल्मार्शो विद्रधिश्वयथुगुह्यरोगेषु च ॥ १८॥

आरग्वधादिकल्कः श्वयथौ ॥ १९॥

आरग्वधः शक्रयवो निम्बोऽमृता भूनिम्बः सौर्यकं पटोलं ससच्छदः सुषवी मूर्वा पाठा बृहती करञ्जद्वयं चेत्यारग्वधादिः ॥ २०॥

तत्कषायसिद्धेन तैलेन लेपः ॥ २१॥

रोध्रादिकल्कः ॥ २२॥

रोध्रं वर्षाभूः करवीरकं किंशुकं विशाला त्रिफला देवदारुर्नलिकाको शातकी माद्री तालपर्णी जयन्ती काकादनी सालो वृषपर्णी नाकुली हस्तिकर्णी चेति रोध्रादिः ॥ २३ ॥

कृमिषु विडङ्गः ॥ २४ ॥

## अथ विंशोऽध्यायः

शुक्रक्षये ॥ १ ॥

धात्रीरसभावितं कृष्णा धात्रीफलरजो भेषजम् ॥ २ ॥

द्राक्षा कल्कवरी धात्रीरससिद्धं घृतम् ॥ ३ ॥

विदार्यादि प्रभृतीनि पञ्च घृतानि ॥ ४ ॥

खर्जूरादि च ॥ ५ ॥

शिवाघुटिका ॥ ६ ॥

योगराजः ॥ ७ ॥

बृंहणं सामान्यतः ॥ ८ ॥

5A यथालाभं मुख्येभ्य इतरेषां योगो योगेषु ॥ ९ ॥

एवं सूत्रितं प्रधानव्याधीनां चिकित्सितं यथा प्राचीनमतम् ॥ १० ॥

अनुक्तमन्यतः ॥ ११ ॥

अनुक्तानां च रोगाणाम् ॥ १२ ॥

सर्वत्र भेषजसेवायां ब्रह्मचर्यं पथ्यं ब्रह्मचर्यं पथ्यम् ॥ १३ ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिश्चिकित्सानुशासनं समाप्तम् ॥

# प्राणतोषणम्

## अथ प्रथमो दोषक्षयवृद्धिविज्ञानीयाध्यायः

अमृतांशुकलाचूडो भिषजां स भिषक्तमः ।
जालाषभेषजो हन्तु दुःखान्यामयजानि वः ॥ १ ॥

सारामृतं प्रमथितादायुर्वेदमहोदधेः ।
आहरामि प्रमोदाय मेदिनीतलवासिनाम् ॥ २ ॥

क्रियते नामधेयेन तदिदं प्राणतोषणम् ।
क्रिययापि रुजार्तानां भवतु प्राणतोषणम् ॥ ३ ॥

रूक्षः शीतो लघुः सूक्ष्मश्चञ्चलो विशदः खरः ।
अल्पस्नेहं तीक्ष्णमुष्णं द्रवमम्लं सरं कटु ॥ ४ ॥

स्थिरः शीतो गुरुः स्निग्धो मधुरः पिच्छिलो मृदुः ।
साम्ये देहस्य धर्तारो वातः पित्तं कफः क्रमात् ॥ ५ ॥

साम्यं त्रयस्य दोषाणां धातूनां सप्तकस्य च ।
मलानां चाप्यरोगत्वं वैषम्यं रोग उच्यते ॥ ६ ॥

चेष्टामान्द्यं मन्दवाक्त्वं हर्षोऽल्पो मूढसंज्ञता ।
सामान्यतस्तु बोध्यानि लिङ्गानि पवनक्षये ॥ ७ ॥

वृद्धौ तु वेपथुः कार्श्यं पारुष्यं गाढविट्कता ।
निद्रानाशोऽल्पमलता नीलिमा चोष्णकामिता ॥ ८ ॥

मन्दोऽग्निर्मन्द ऊष्मा च निष्प्रभत्वं कलेवरे ।
सामान्यतो लक्षणानि कीर्त्यन्ते पित्तसङ्क्षये ॥ ९ ॥

पित्ते प्रकुपिते तापः पीतविण्मूत्रनेत्रता ।
शीतकामोऽल्पनिद्रत्वं मूर्छेन्द्रियबलक्षयः ॥ १० ॥

रूक्षता सन्धिशैथिल्यं पिपासा च प्रजागरः ।
अन्तर्दाहश्च बोध्यानि लिङ्गानि च कफक्षये ॥ ११ ॥

वृद्धौ तु तन्द्राशीतत्वमतिनिद्राऽतिगौरवम् ।
शौक्ल्यं सन्ध्यस्थिविश्लेषः स्थिरत्वमवसन्नता ॥ १२ ॥

## अथ द्वितीयो धातुक्षयवृद्धिविज्ञानीयाध्यायः

रसक्षये तु हृत्पीडा कम्पस्तृष्णा च शून्यता ।
वृद्धस्तु हृदयोत्क्लेशप्रसेकौ कुरुते रसः ॥ १ ॥

त्वक्पारुष्यं सिरादार्ढ्यं लोपः शीताम्लकामिता ।
रक्तस्य लोपे वृद्धौ तु रक्ताङ्गत्वं शिरोच्छ्रयः ॥ २ ॥

स्फिग्गण्डोष्टोपस्थवक्षः कक्षसक्थिगलोदरे ।
शुष्कता गात्रसदनं तोदः स्पर्शे च रूक्षता ॥ ३ ॥

धमनीनां च शैथिल्यं क्षीणमांसस्य लक्षणम् ।
मांसवृद्धौ तु वर्धन्ते गात्राणि स्युर्गुरूणि च ॥ ४ ॥

रौक्ष्यं मेदुरमांसाशाशून्यत्वमपि सन्धिषु ।
प्लीहवृद्धिश्च लिङ्गानि क्षये बोध्यानि मेदसः ॥ ५ ॥

दौर्गन्ध्यं स्निग्धदेहत्वं श्वासः काशश्च दारुणः ।
पार्श्वोदराभिवृद्धिश्च लिङ्गमुद्वेलमेदसः ॥ ६ ॥

अस्थिक्षये लक्षणसङ्ग्रहोऽयं रौक्ष्यास्थिभेदौ नखदन्तभङ्गः ।
अध्यस्थिमत्वादधिदन्तवत्वादस्थ्नां प्रवृद्धिं प्रवदेन्मनीषी ॥ ७ ॥

पर्वभेदोऽल्पशुक्रत्वमस्थिनि तोदशून्यते ।
मज्जाक्षये लक्षणानि विज्ञेयानि मनीषिभिः ॥ ८ ॥

गौरवं सर्वगात्राणां नेत्रयोरपि गौरवम् ।
मज्जाभिवृद्धौ जानीयाल्लक्षणे द्वे चिकित्सकः ॥ ९ ॥

अशक्तिश्च चिरात्सेकः सिक्तं चापि सलोहितम् ।
वेदनालिङ्गदेशे च क्षीणशुक्रस्य लक्षणम् ॥ १० ॥

शुक्राश्मरोशुक्रमेहौ लिङ्गे कुपितरेतसः ।
इत्येवं दोषधातूनां क्षयः कोपश्च सूत्रितौ ॥ ११ ॥

## अथ तृतीयो मलक्षयवृद्धिविज्ञानीयाध्यायः

हृत्पार्श्वपीडनं वायोरूर्ध्व शब्दवतो गतिः ।
कुक्षौ सञ्चरणं चेति पुरीषस्य च लक्षणम् ॥ १ ॥

आटोपः कुक्षिशूलं च वृद्धे स्यातां पुरीषके ।
वस्तितोदोऽल्पमूत्रत्वं क्षीणमूत्रस्य लक्षणम् ॥ २ ॥

आध्मानं वस्तितोदश्च प्रवृत्तिश्च मुहुर्मुहुः ।
भवन्त्येतानि लिङ्गानि मूत्रे वृद्धे शरीरिषु ॥ ३ ॥

संस्तम्भरोमकूपत्वं त्वक्छोषोऽस्वेदगात्रता ।
विगुणस्पर्शता चेति क्षीणस्वेदस्य लक्षणम् ॥ ४ ॥

कण्डूस्त्वचश्च दौर्गन्ध्यं स्वेदे प्रकुपिते मले ।
कालातिक्रान्तिरल्पत्वं योनिपीडाऽऽर्तवक्षये ॥ ५ ॥

अतिप्रवृत्तिर्दौर्बल्यमङ्गमर्दश्च दारुणः ।
भवन्ति वामनेत्राणामार्तवस्य प्रकोपतः ॥ ६ ॥

स्तनम्लानत्वमल्पत्वं स्तन्यस्य स्तन्यसङ्क्षये ।
वृद्धौ तु स्तनपीनत्वं तोदश्च स्तनयोर्भवेत् ॥ ७ ॥

गर्भस्पन्दोऽल्पकुक्षित्वं नारीणां गर्भसङ्क्षये ।
कुक्षिवृद्धिश्च शोफश्च गर्भे प्रकुपिते मले ॥ ८ ॥

## अथ चतुर्थो हीनसमधिकदोषविज्ञानीयाध्यायः

क्रुद्धो यदा समीरः स्यात्पित्ते क्षीणे कफे समे ।
विदधाति तदा शूलं सशैत्यस्तम्भगौरवम् ॥ १ ॥

भेदः परिश्रमो दाहो दौर्बल्यमनवस्थितिः ।
समे पित्ते कफे क्षीणे गुणाः क्रुद्धो यदाऽनिलः ॥ २ ॥

क्षीणे श्लेष्मणि पित्ते च भृशं मर्माणि पीडयन् ।
चलः क्रुद्धो हरेत्संज्ञां कामं वा वेपयेन्नरम् ॥ ३ ॥

समीरणे परिक्षीणे कफे समतया स्थिते ।
पित्तं प्रवृद्धं कुरुते सतन्द्रा गौरवं ज्वरम् ॥ ४ ॥

यदा कफः परिक्षीणे वायुः साम्ये न तिष्ठति ।
अन्तर्बहिश्च सन्तापं वायुः कुर्यात्तदा बली ॥ ५ ॥

ग्लानिरिन्द्रियदौर्बल्यं तृष्णा मूर्च्छा क्रियाक्षयः ।
भवन्ति पित्ते सङ्क्रुद्धे क्षीणयोः कफवातयोः ॥ ६ ॥

वाते क्षीणे समे पित्ते विदधीत कफो बली ।
निद्रां प्रलापं हृद्रोगं नखादीनां च पीतताम् ॥ ७ ॥

यदा पित्तं परिक्षीणं वायुः साम्ये न तिष्ठति ।
सशैत्यं गौरवं कुर्याज्ज्वरं क्रुद्धस्तदा कफः ॥ ८ ॥

चेष्टाप्रणाशं वाक्सङ्गं शैत्यं चापि विशेषतः ।
क्षीणे समीरे पित्ते च प्रवृद्धः कुरुते कफः ॥ ९ ॥

कफे प्रशान्ते कुर्वाते पित्तौ क्रुद्धसमीरणौ ।
कम्पं दाहं भ्रमं दोहं शोषमप्यङ्गमर्दनम् ॥ १० ॥

नरस्य क्षीणपित्तस्य मारुतः श्लेष्मणा सह ।
गौरवं शीतकं स्तम्भं तोदं कम्पमरोचकम् ॥ ११ ॥

मृदुत्वं वीतिहोत्रस्य नखादीनां च शुक्लताम् ।
पारुष्यमपि गात्रस्य कुर्वीत प्रबलश्चरन् ॥ १२ ॥

क्रुद्धावुभौ पित्तकफौ परिक्षीणे समीरणे ।
कुर्वाते पाण्डुवर्णत्वं सदनं गौरवं मदम् ॥ १३ ॥

हृल्लासमास्यस्त्रवणं पाकभावमरोचकम् ।
विरेकस्य च वैषम्यं वैषम्यं पावकस्य च ॥ १४ ॥

द्वयोः सङ्क्षीणयोर्वृद्धिं यातयोरुत दोषयोः ।
अन्यस्मिन् सदृशे बोध्यः प्रागुक्तगुणसङ्करः ॥ १५ ॥

दोषत्रये प्रकुपिते सर्वलक्षणसङ्करः ।
दोषत्रये क्षये प्राणी नैव जीवति कर्हिचित् ॥ १६ ॥

## अथ पञ्चमो भेषजसूत्रीयाध्यायः

वृद्धौ तु क्षपणं शस्तं क्षये शस्तं तु भेषजम् ।
दोषाणामपि धातूनां मलानां च समासतः ॥ १ ॥

तावती क्षपणे मात्रा यावती साम्यकारिणी ।
व्याख्याता वर्द्धने मात्रा क्षपणस्यैव मात्रया ॥ २ ॥

कामं तुल्यगुणाभ्यासो दोषादेर्वृद्धिकारणम् ।
विपरीतगुणाभ्यासः सञ्चयस्य तु कारणम् ॥ ३ ॥

स्निग्धोष्णं भेषजं वाते पित्ते सस्नेहशीतलम् ।
रूक्षोष्णं श्लेष्मणि क्रुद्धे यथा तैलं घृतं मधु ॥ ४ ॥

रूक्षशीतं कृशे वाते पित्ते स्नेहावरा हिमम् ।
स्निग्धशीतं कफे क्षीणे भेषजं परिशस्यते ॥ ५ ॥

धातूनां सङ्क्षये प्रायो बृंहणं कर्म शस्यते ।
वृद्धौ तु लङ्घनं शस्तं कर्मशुक्राश्रितं विना ॥ ६ ॥

मलानां सङ्क्षये प्रायः स्वेदनं प्राहुरुत्तमम् ।
वृद्धौ तु स्तम्भनं शस्तं रेचनं वात लेखनम् ॥ ७ ॥

नातिरूक्षं मितस्नेहमुष्णं प्रवु ऽपिते चले ।
पित्ते परिक्षयं याते कफे समतया स्थिते ॥ ८ ॥

भेषजं नातिशीतोष्णं स्निग्धं वृद्धे समे कृशे ।
उभयं तत्क्रमात्कार्यं कर्म वृद्धेविहीनयोः ॥ ९ ॥

नातिस्निग्धं नातिरूक्षं शीतं हीनेऽधिके समे ।
भेषजं स्निग्धशीतं स्यात्समे प्रकुपिते कृशे ॥ १० ॥

कुपिते मध्यमे दोषे कृशयोरादिमान्त्ययोः ।
किञ्चिद्रूक्षं शीतवीर्यं भेषजं परिशस्यते ॥ ११ ॥

भेषजं नातिशीतोष्णं रूक्षं हीनेऽधिके समे ।
रूक्षोष्णमेव पथ्यं स्याद्द्रव्यं तुल्ये कृशेऽधिके ॥ १२ ॥

कुपिते चरमे दोषे कृशयोरादिमध्ययोः ।
किञ्चिद्रूक्षं प्रशस्तं स्यादुष्णविक्रममौषधम् ॥ १३ ॥

आद्ययोः कोपमितयोरन्त्ये क्षीणे तु भेषजम् ।
स्निग्धं च समशीतोष्णं सदृशेऽन्त्येऽप्ययं क्रमः ॥ १४ ॥

पूर्वान्त्ययोः कुपितयोर्मध्ये क्षीणे तु भेषजम् ।
तुल्यरौक्ष्यस्नेहमुष्णं तुल्ये मध्येऽप्ययं क्रमः ॥ १५ ॥

अन्त्ययोः कोपमितयोराद्ये क्षीणे तु भेषजम् ।
रूक्षं च समशीतोष्णमाद्ये तुल्येऽप्ययं क्रमः ॥ १६ ॥

कफस्थानानुपूर्व्येण तुल्यं प्रकुपितान् मलान् ।
जये दोषचिकित्सायाः सङ्ग्रहो वैद्यसम्मतः ॥ १७ ॥

ज्वरस्यादौ तु पेयाः स्युः उक्तलक्षणलक्षिताः ।
कषायाः पाकमापन्ने घृतान्याप्ते पुराणताम् ॥ १८ ॥

लोहा एव तु शस्यन्ते पाचनार्थेषु कर्मसु ।
तैलचूर्णास्तु शस्यन्ते शोधनार्थेषु कर्मसु ॥ १९ ॥

घृतान्येव तु शस्यन्ते बृंहणार्थेषु कर्मसु ।
भस्मान्येव तु शस्यन्ते लङ्घनार्थेषु कर्मसु ॥ २० ॥

## अथ षष्ठः षड्विधोपक्रमणीयाध्यायः

बृहणं लङ्घनं चेति स्नेहनं रूक्षणं तथा ।
स्तम्भनं स्वेदनं चेति षड्विधं स्याद्भिषग्जितम् ॥ १ ॥

शीतवीर्यं बृंहणं स्यादुष्णवीर्यं तु लङ्घनम् ।
स्निग्धं स्नेहनमाख्यातं रूक्षं रूक्षणमुच्यते ॥ २ ॥

शीतं रूक्षं च यद्द्रव्यं स्तम्भनं तदुदाहृतम् ।
स्निग्धमुष्णं च यद्द्रव्यं तत्स्वेदनमुदीर्यते ॥ ३ ॥

बृंहणे लङ्घने चापि समत्वं स्नेहरौक्ष्ययोः ।
स्नेहने रूक्षणे चापि समशीतोष्णता मता ॥ ४ ॥

स्निग्धशीतं तु यद्द्रव्यं तत्स्यात्स्नेहनबृंहणम् ।
रूक्षमुष्णं च यद्द्रव्यं तत्स्याद्रूक्षणलङ्घनम् ॥ ५ ॥

द्वाभ्यां संयुक्तमेताभ्यां षड्विधं तद्भिषग्जितम् ।
बोध्यमष्टविधं प्राज्ञैः शोभते तद्विभागवित् ॥ ६ ॥

सान्द्रत्वं द्रवता चेति कठिनत्वं च मार्दवम् ।
खरत्वं श्लक्ष्णता चेति सूक्ष्मत्वं स्थूलता तथा ॥ ७ ॥

पिच्छिलत्वं विशदता गुरुत्वमपि लाघवम् ।
स्थिरत्वं सरता चेति मन्दत्वं तीक्ष्णता तथा ॥ ८ ॥

उष्णत्वमपि शीतत्वं स्निग्धत्वमपि रूक्षता ।
एवं गुणानां द्वन्द्वानि दृश्यन्ते दशवस्तुषु ॥ ९ ॥

द्वन्द्वानि गौरवादीनि पञ्च तत्र प्रधानताम् ।
भजन्ते गुणचर्यायां समस्तेष्वौषधेष्वपि ॥ १० ॥

तत्राप्यन्तोदिते द्रव्ये द्वे प्रधानतमे मते ।
तयोर्यथावद्ग्रहणाज्जायते वस्तुवीर्यवित् ॥ ११ ॥

गुरु मन्दं स्थिरं प्रायो बृंहणं परिकीर्त्यते ।
लघु तीक्ष्णं सरं प्रायो लङ्घनं परिदृश्यते ॥ १२ ॥

तस्मात् त्रयो गुरुत्वाद्याः शीतत्वानुसृता गुणाः ।
गुणास्त्रयो लघुत्वाद्या उष्णत्वानुगता मताः ॥ १३ ॥

गुरु मन्दं सरं प्रायः स्नेहनं परिकीर्त्यते ।
लघु तीक्ष्णं स्थिरं प्रायो रूक्षणं परिभण्यते ॥ १४ ॥

शीतादुष्णादिति द्रव्यात्तृतीये दृश्यते गुणे ।
स्निग्धस्य च विरूक्षस्य भेदो वस्तु परीक्षणे ॥ १५ ॥

गुरुत्वादपि मान्द्याच्च शीते स्निग्धसमानता ।
स्थैर्याद्रूक्ष समानत्वं तस्मात्तदुभयानुगम् ॥ १६ ॥

लघुत्वादपि तीक्ष्णत्वादुष्णे रूक्षसमानता ।
सरत्वात् स्निग्धतुल्यत्वं तस्मात्तदुभयानुगम् ॥ १७ ॥

गौरवादपि मान्द्याच्च सरत्वं यत्र मुख्यताम् ।
प्रयाति वस्तुनि स्निग्धे तदौष्ण्यानुगतं भवेत् ॥ १८ ॥

लाघवादपि तैक्ष्ण्याच्च स्थिरत्वं यत्र मुख्यताम् ।
रूक्षे वस्तुनि संयाति तच्छैत्यानुगतं भवेत् ॥ १९ ॥

एवं गुरुत्वान्मान्द्याच्च स्थिरत्वं यत्र मुख्यताम् ।
शीते वस्तुनि संयाति तद्रौक्ष्यानुगतं भवेत् ॥ २० ॥

तथा लघुत्वात्तैक्ष्ण्याच्च सरत्वं यत्र मुख्यताम् ।
उष्णे वस्तुनि संयाति तत् स्नेहानुगतं भवेत् ॥ २१ ॥

व्याख्यातं स्वेदनस्यैवं स्वरूपं स्तम्भनस्य च ।
वेदिता षड्विधस्यैवं भेषजस्य कृती भिषक् ॥ २२ ॥

शीते स्निग्धेऽथवा द्रव्ये गुणावाद्यौ प्रधानताम् ।
तृतीयतः प्रयाताश्चेत् स्निग्धशीतं भवेदिदम् ॥ २३ ॥

उष्णे रूक्षेऽथवा द्रव्ये गुणावाद्यौ प्रधानताम् ।
तृतीयतः प्रयाताश्चेद्रूक्ष्णोष्णं तत्प्रजायते ॥ २४ ॥

स्निग्धस्य च विरूक्षस्य शैत्यौष्ण्योभयशालिता ।
गुणसङ्करतः प्राग्वद्बोध्या केवलयोः पुनः ॥ १५ ॥

## अथ सप्तमः पञ्चविधद्रव्यविज्ञानीयाध्यायः

खरं च कठिनं मन्दं स्थूलं सान्द्रमपिच्छिलम् ।
गुरुस्थिरं भूरिगन्धं भौमं द्रव्यमुदाहृतम् ॥ १ ।

शीतं मन्दं द्रवं स्निग्धं पिच्छिलं मार्दवान्वितम् ।
द्रव्यं यद्रसभूयिष्ठमाप्यं तत्परिचक्षते ॥ २ ॥

लघूष्णं विशदं तीक्ष्णं सूक्ष्मं रौक्ष्यसमन्वितम् ।
द्रव्यं यद्रूपभूयिष्ठं तदाग्नेयमुदाहृतम् ॥ ३ ॥

वायुद्रव्यगुणं प्रोक्तं भूरिस्पर्शगुणं तथा ।
ज्ञातसारैर्विपश्चिद्भिर्वायव्यं द्रव्यमागमे ॥ ४ ॥

मृदु सूक्ष्मं लघुश्लक्ष्णं भूरिशब्दगुणं तथा ।
आन्तरिक्षं स्मृतं द्रव्यं वस्तुतत्त्वार्थकोविदैः ॥ ५ ॥

बृंहणं प्रोच्यते भौमं नरैर्युक्त्या निषेवितम् ।
आप्यं तु सेवितं युक्त्या भवेत् स्नेहनबृंहणम् ॥ ६ ॥

आग्नेयं दोषशमनं दीपनं लङ्घनं तथा ।
वायव्यं दोषजननं मेध्यमाम्बरमुच्यते ॥ ८ ॥

## अथाष्टमो रसविज्ञानीयाध्यायः

स्निग्धः शीतो गुरुश्चापि युक्तश्चान्द्रमसैर्गुणैः ।
रसानां मधुरो राजा कफकृद्वातपित्तहा ॥ १ ॥

उष्णः स्निग्धो लधुश्चापि भूमिवह्निगुणान्वितः ।
अम्लो रसो द्वितीयस्तु वातहा कफपित्तकृत् ॥ २ ॥

उष्णः स्निग्धो गुरुश्चापि तोयवह्निगुणान्वितः ।
लवणः शमयेद्वातं कोपनः कफपित्तयोः ॥ ३ ॥

उष्णो रूक्षो लघुश्चापि वह्निवायुगुणान्वितः ।
कटुः प्रजनयेद्वातं पित्तं च कफदोषहा ॥ ४ ॥

रूक्षः शीतो गुरुश्चापि भूमिवायुगुणान्वितः ।
कषायो जनयेद्वातं हन्ता पित्तबलासयोः ॥ ५ ॥

रूक्षः शीतो लघुश्चापि वाताकाशगुणान्वितः ।
तिक्तः प्रजनयेद्वातं शमनः कफपित्तयोः ॥ ६ ॥

स्वादुरसः कटुश्चेति विपाकस्त्रिविधो मतः ।
अम्लोऽम्ले लवणे स्वादौ स्वादुरन्येषु वै कटुः ॥ ७ ॥

रसं पाकं च वीर्यं च प्रभावं च पृथग्विधम् ।
वैद्यो विज्ञाय वस्तूनां प्रयोक्तुं पुनरर्हति ॥ ८ ॥

एवं दोषादिवैषम्यं लक्षणं स भिषग्जितम् ।
प्राचां संशोध्य शास्त्राणि सामान्येनेह सूत्रितम् ॥ ९ ॥

॥ इति श्रीभगवन्मर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिः प्राणतोषणं समाप्तम् ॥

# होरानिर्णयसङ्ग्रहः

## प्रथमः सामान्यसंज्ञाध्यायः

कल्याणं कश्चिदस्माकं करोतु ज्योतिषांपतिः ।
यस्य विष्णुवधूसौधकवाटोद्घाटनाः कराः ॥ १ ॥

मतमालोच्य पूर्वेषामृषीणां दीर्घदर्शिनाम् ।
दैवज्ञानां मुदे कुर्मो होरानिर्णयसङ्ग्रहम् ॥ २ ॥

पूर्णालोकश्च संयोगो ग्राह्यौ सम्बन्धशब्दतः ।
संयोगमात्रे संयोग योगसंसर्गसङ्गमाः ॥ ३ ॥

ग्राह्या पादादि दृष्टिश्च दृष्टिवाचकशब्दतः ।
शुभाश्चातिशुभा देवा दैत्याः पापातिपापिनः ॥ ४ ॥

धीस्तपोजन्मकोणानि प्रतीपं तु तदस्तभम् ।
त्रिकं षष्ठाष्टमान्त्यानि शेषो भोग इहोच्यते ॥ ५ ॥

दक्षिणाधनषष्ठाज्ञाः सव्याः सुखमृतिव्ययाः ।
रमाऽऽख्यौ मातृदशमौ विष्ण्वाख्यौ भाग्यपञ्चमौ ॥ ६ ॥

पञ्चमस्य च राज्यस्य द्वितीयः शत्रुरात्मतः ।
व्ययश्चतुर्थतपसोर्द्वयं लग्नस्य सस्मरम् ॥ ७॥

स्वतन्त्रा अयुजो भावाः परतन्त्रा युजो मताः ।
कोणभोगाः शुभाः प्रोक्ताः शेषाः पापाः स्वभावतः ॥ ८॥

निसर्गपदसद्भावे पापाः सूर्यसुतादयः ।
शुभा गुर्वादयश्चेति ज्ञेयं सामान्यशास्त्रतः ॥ ९॥

फलान्यतिशुभादीनां दशास्वेव विनिर्दिशेत् ।
कालानपेक्षं वक्तव्यं राजयोगादिजातके ॥ १०॥

श्रीपतेः षड्विधं वीर्यं संज्ञारिष्टे वराहतः ।
फलानि विन्दन्नेतस्माद्दैवज्ञो विजयी भवेत् ॥ ११॥

*३, १० - पाददृष्टिः , ५, ९ अर्ध , ४, ८ त्रिपाद, ७ पूर्ण*
*अपवादाः*
*अत्र शनेः पूर्णः अत्र गुरोः पूर्णः अत्र (कुजस्य) ११*

## अथ द्वितीयो विशिष्टसंज्ञाध्यायः

कोणभोगपतिः कोणत्रिकेड्भोगप्रतीपपः ।
त्रिकप्रतीपपो भौम मुखेष्वति शुभादयः ॥ १॥

अपि स्वभावतः पापं परतन्त्रतया त्रिकम् ।
कोणेन बलिनाश्लिष्टं भवति क्षीणविक्रमम् ॥ २॥

परतन्त्रतया भोगः स्वभावेन शुभोऽपि सन् ।
पापप्रतीपसंश्लेषाद्भवति स्वगुणाच्च्युतः ॥ ३॥

तनोः सामान्यतो मित्रमपि शत्रुर्विशेषतः ।
द्वितीयोऽतस्तयोरीशो नाम्नाग्र्योऽनन्तरः फले ॥ ४॥

कोणानि स्वसमीपस्थ त्रिकयुञ्जिशुभानि चेत् ।
नान्वयाद्भावशक्तीनां द्वेषिस्वव्ययययोः क्षयात् ॥ ५॥

भास्वतो दक्षिणाः सव्याः शीतांशोः सव्यदक्षिणाः ।
शुभाशुभाद्वयोः कोणप्रतीपेऽतिशुभा शुभे ॥ ६॥

षष्ठनाथः सहस्रांशुश्चन्द्रो रन्ध्रान्त्यनायकः ।
लग्ननाथसुहृत्वेन न पापावित्यतः शुभौ ॥ ७॥

लग्ननाथा सुहृत्वेन दौर्बल्यादपि तद्दिशि ।
न शुभावित्यतः पापाविमौ वाहनकर्मपौ ॥ ८॥

*(दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च)*

## अथ तृतीय उदाहरणाध्यायः

मेषस्य सूर्यो जीवारचन्द्राः सौरिसितौ बुधः ।
शनिज्ञौ भार्गवो भानुश्चन्द्रारगुरवो वृषे ॥ १॥

युग्मस्य सौम्यः शुक्रार्की चन्द्रेज्यौ रविभूसुतौ ।
भौमेन्दू जीवभास्वन्तौ शुक्रो ज्ञार्की च कर्किणि ॥ २॥

भौमार्कौ गुरुशीतांशू शुक्रसौम्यौ शनिर्हरौ ।
स्त्रियां सितबुधौ मन्दो गुर्वर्काविन्दुभूसुतौ ॥ ३॥

मन्दोज्ञशुक्रौ चन्द्रारौ सूर्यजीवौ च तौलिनि ।
चन्द्रजीवौ रविकुजौ मन्दः शुक्रबुधावलौ ॥ ४॥

धनुष्यर्कगुरुभौमचन्द्रौ बुधशनी सितः ।
शुक्रमन्दौ बुधो भौमरवी चन्द्रगुरू मृगे ॥ ५॥

घटे शुक्रो बुधशनी भौमेन्दुगुरवो रविः ।
कुजेन्दुगुरवः सूर्यो बुधः शनिसितौ झषे ॥ ६॥

द्वादशानामतिशुभाः क्रमादेवं शुभा अपि ।
पापिनश्चातिपापाश्च लग्नानां समुदाहृताः ॥ ७॥

शनिशुक्रबुधर्क्षाणामितरे दैत्यसंज्ञकाः ।
त्रयस्ते चेतरर्क्षाणां दैत्यभिन्ना दिवौकसः ॥ ८॥

यथा पूर्वं बलं ज्ञेयं प्रतियोगं सुपर्वणाम् ।
यथोत्तरं च दैत्यानां तारतम्यविनिर्णये ॥ ९॥

## अथ चतुर्थः सबन्धस्थितिविचारणाध्यायः

फले तमोग्रहौ स्यातां सम्बद्धग्रहसन्निभौ ।
तदभावे समारूढराशिनायकसन्निभौ ॥ १॥

त्रयाणां पुनराद्यानां द्वयोरतिशुभादिषु ।
संयोगेष्ववरो योगी श्रेष्ठः स्वावरसंज्ञकः ॥ २॥

श्रीकेशवेशयोर्योगे देवयोर्योगिनावुभौ ।
दैत्यरन्ध्रान्त्यपत्योश्च योगे द्वावपि योगिनौ ॥ ३॥

सर्वे भावाधिपतयः सवर्णगृहसंस्थितेः ।
सवर्णस्य च संयोगात्प्रभविष्यन्ति योगिनः ॥ ४॥

सर्वेष्वेतेषु योगेषु पूर्णालोके परस्परम् ।
बलावरो भवेद्योगी बलाधिकमदूषयन् ॥ ५॥

सर्वेष्वेतेषु योगेषु ज्यायसा पूर्णमीक्षितः ।
तमपश्यन्कनीयांश्च योगीति समुदाहृतः ॥ ६॥

देवश्रीहरिपौ विष्णुदेवश्रीगौ तु योगिनौ ।
दैत्यः पद्मालयानाथः शुभदः केशवस्थितः ॥ ७॥

अतिपापातिशुभयोर्योगे पूर्वः शुभो भवेत् ।
अपरो भविता पापः सङ्ज्ञा हि गुणागुणाः ॥ ८॥

युक्तः शुभेनातिपापः पापेन च शुभप्रदः ।
न पातयेच्छुभं नीचैरुच्चैरारोहयेत्पदम् ॥ ९॥

त्र्यादीनां भिन्नजातीनां योगे ज्यायान्पतत्यधः ।
कनीयांच्छुभकारी स्याद्योगिनो मध्यवर्तिनः ॥ १०॥

## अथ पञ्चमो मारकविचारणाध्यायः

स्वयं लग्नारिपतयः तथा लग्नारिसंस्थिताः ।
लग्नारिपयुता दैत्या मारकाः स्युर्यथोत्तरम् ॥ १॥

व्ययेशाद्वित्तपस्तस्मात्सप्तमेशोऽधिको सुरः ।
एवं स्थितौ च संसर्गे निमित्तबलनिर्णयः ॥ २॥

तत्र स्थितेषु दैत्येषु बली नैसर्गिकः शुभः ।
तेन युक्तेषु पापेषु पापो नैसर्गिको बली ॥ ३॥

अलाभे हन्तृदैत्यस्य देवा मारकलक्षणाः ।
प्रागुक्ततारतम्येन कल्प्यन्तां जीवितापहाः ॥ ४॥

अत्रातिशुभतः श्रेष्ठमष्टमेशं प्रचक्षते ।
उपहन्तायुरीशत्वात्स हि प्रायेण नायुषः ॥ ५॥

वक्ष्यमाणेन मार्गेण दीर्घमध्याल्पकायुषः ।
निश्चित्य जातकान्पश्चात्कुर्यान्मारकनिर्णयम् ॥ ६॥

## अथ षष्ठो दशान्तर्दशाध्यायः

श्रीप्रदाः स्वदशाकाले व्ययेशो लाभनायकः ।
भोगेश्वरो विष्णुपतिर्हितत्वे तु यथोत्तरम् ॥ १॥

श्रीहराः स्वदशाकाले विष्णवीशो भोगनायकः ।
अन्त्येशायेशरन्ध्रेशा अहितत्वे यथोत्तरम् ॥ २॥

दशासु देहसुखदाः षष्ठेशास्तेशवीर्यपाः ।
रन्ध्रेशो लग्ननाथश्च हितत्वे तु यथोत्तरम् ॥ ३॥

दशासु देहकष्टास्य लग्नेशः शत्रुनायकः ।
तथा लग्नद्विषांनाथा अहितत्वे यथोत्तरम् ॥ ४॥

अगतौजाः खगो देयं स्वसजातीयभुक्तिषु ।
फलं दद्यादुतौजास्तु भिन्नजातीयभुक्तिषु ॥ ५॥

अगतौजाः फलं खेटो भिन्नजातीयभुक्तिषु ।
मिश्रं दद्याद्गतौजास्तु स्वसजातीयभुक्तिषु ॥ ६॥

पापत्वमोजसो हानिः शुभातिशुभयोरिह ।
शुभत्वमोजसो हानिः तथापापातिपापयोः ॥ ७॥

दैतेयस्यापि दैतेयो निर्जरस्यापि निर्जरः ।
भिन्नजातीयतुल्यः स्यात् गतौजा अगतौजसः ॥ ८॥

दैतेयस्य सुपर्वा च दैतेयश्च सुपर्वणः ।
स्वसजातीयतुल्यः स्यात् गतौजा अगतौजसः ॥ ९॥

योगी निमित्तभूतस्य भुक्तौ श्रेयः फलप्रदः ।
योगिमध्यगतत्पक्षदशा श्रेयः फलप्रदः ॥ १०॥

यः शुभो व्यतिरेकेण यः पापो व्यतिरेकतः ।
फलं वदेत्तद्दशयोः भुक्तिनाथानुसारतः ॥ ११॥

फलमिष्टमनिष्टं वा शुभः पापोऽथवा ग्रहः ।
स्वभुक्तौ न दिशेन्नृणां मारकस्तु दिशेत्क्वचित् ॥ १२॥

आयुर्विचार्य प्रथमं तारतम्यमनन्तरम् ।
निर्णीतं मारकं ब्रूयाद्धन्तारं दैत्यभुक्तिषु ॥ १३ ॥

निर्धार्य सूक्ष्मया बुद्ध्या तासु चैकां विनिर्दिशेत् ।
आयुर्मानाविरोधेन तारतम्यं विचिन्तयन् ॥ १४ ॥

## अथ सप्तमो भावाध्यायः

अध्याये यत्र यत्रास्मिन्नामनी शुभपापयोः ।
तत्र तत्र निसर्गेणेत्यध्याहार्यं विचक्षणैः ॥ १ ॥

पत्युः प्रतीपकमलाकोणस्वर्क्षोच्चसंस्थितिः ।
सम्बन्धश्चेशशुभयोः भावस्य बलवृद्धये ॥ २ ॥

तारतम्यं प्रतीपादौ मित्रामित्रर्क्षचिन्तनात् ।
तेभ्यः स्वर्क्षन्ततस्तुङ्गः सम्बन्धो बलवान्स्ततः ॥ ३ ॥

भावस्य भावनेतुर्वा सम्बन्धः पापखेचरैः ।
त्रिकनीचस्थितेशस्य भावस्य बलहानये ॥ ४ ॥

सामान्यरीत्या भावानामेवं प्रोक्तं बलाबलम् ।
आयुषो निर्णयं वक्ष्ये विद्वत्प्रीत्यै विशेषतः ॥ ५ ॥

लग्नरन्ध्रशशाङ्कानां बलेनायुर्विचिन्तयेत् ।
त्रिष्वायुरबलेष्वल्पं मध्याल्पं हीनयोर्द्वयोः ॥ ६ ॥

उभयोर्बलिनोः शेषे हीने स्यान्मध्यपूर्वकम् ।
शेषेत्वहीने दीर्घाल्पं सर्वेषां परमं बले ॥ ७ ॥

लग्नायुः कर्मनाथानां चिन्त्यमायुर्बलेन च ।
ग्रहाणां तत्तदुचितस्थानस्थित्या च चिन्त्यताम् ॥ ८ ॥

यथैव लग्नाद्भावानां सर्वेषामन्ववेषणम् ।
तथा भवति चन्द्राच्च सूर्याच्चेत्यपरे जगुः ॥ ९ ॥

## अथाष्टमो योगाध्यायः

अरन्ध्राया श्लेषदोषौ धर्मकर्माधिनायकौ ।
राजयोगकरौ स्यातां सम्बन्धात्परिवर्तनात् ॥ १ ॥

लग्नेशदृष्टियोगाभ्यां योगोऽयं प्रबलो भवेत् ।
रन्ध्रेश्वरस्य दैत्यस्य भवेद्योगेन दुर्बलः ॥ २ ॥

अषष्ठायाश्लेषदोषौ बुद्धिकर्माधिनायकौ ।
राजयोगकरौ स्यातां सम्बन्धात्परिवर्तनात् ॥ ३ ॥

अयं च योगो लग्नेशदृग्योगाभ्यां बली भवेत् ।
षष्ठेश्वरस्य दैत्यस्य भवेद्योगेन दुर्बलः ॥ ४॥

अव्ययायाश्लेषदोषौ लग्नकर्माधिनायकौ ।
राजयोगकरौ प्राग्वत् सम्बन्धात्परिवर्तनात् ॥ ५॥

विष्ण्वीशयोगदृष्टिभ्यां योगोऽयं प्रबलो भवेत् ।
व्ययेश्वरस्य दैत्यस्य भवेद्योगेन दुर्बलः ॥ ६॥

राजयोगः परश्चन्द्रो यदि सर्वग्रहेक्षितः ।
सर्वग्रहेक्षितं राज्यं यदि योगोऽन्य उच्यते ॥ ७॥

विद्यते यस्य भावस्य सर्वग्रहविलोकनम् ।
योगस्तद्भावसम्बन्धी भवेत् कश्चिदनुत्तमः ॥ ८॥

सर्वैर्नैसर्गिकशुभैः त्रिषडायास्पदस्थितैः ।
योगः सूपचयो नाम धनवृद्धिकरो नृणाम् ॥ ९॥

चन्द्रतश्चेदयं योगो बुद्धिवृद्धिकरो भवेत् ।
धने व्यये चोभयत्र श्रीयोगो मङ्गळादिभिः ॥ १०॥

योगः केमुद्रिमो नाम ग्रहाभावे प्रकीर्तितः ।
केन्द्रस्थिते सग्रहे वा चन्द्रे नायमिति स्थितिः ॥ ११॥

पुनश्चन्द्रात्सपत्नास्त रन्ध्रस्थैरखिलैः शुभैः ।
नैसर्गिकैर्भवेच्छ्रेयानधियोगोधिकारदः ॥१२॥

त्र्यादिभिस्तुङ्गगैः खेटैः स्वर्क्षस्थैश्चतुरादिभिः ।
पञ्चादिभिश्च संयुक्तैः योगा ऐश्वर्यदायकाः ॥१३॥

इति सामान्यतः प्रोक्तं शास्त्रं गम्भीरमुज्ज्वलम् ।
उपदेशाय शिष्याणां गोकर्णे विलसद्धियाम् ॥१४॥

॥ इति श्रीमन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिर्होरानिर्णयसङ्ग्रहःसमाप्तः ॥

# अथ षोडशश्लोकी

प्रायो देहेशितुः सख्युः दशा शुभफलप्रदा ।
समा समस्य विज्ञेया शत्रोः पापफलप्रदा ॥ १॥

पापाः सपत्नरन्ध्रान्त्यवीर्यलाभास्तनायकाः ।
शुभाश्चतुर्थवित्ताज्ञा लग्नपुत्रतपोधिपाः ॥ २॥

राशिद्वयपतीनां चेत् शुभत्वमपि पापता ।
विचारे तारतम्यस्य बलीयान्विषमः समात् ॥ ३॥

यदि राशिद्वयपतेः शुभत्वमपि पापता ।
सूर्यपुत्रस्य पापत्वं शुभत्वादतिरिच्यते ॥ ४॥

शुभोऽपि नाधिकं योगी चन्द्रो भास्वति पापिनि ।
शुभे पापोऽपि पापो न रविश्चैवं निशाकरे ॥ ५॥

धीधर्माज्ञासुखेशानां बहूनामथवा द्वयोः ।
रन्ध्रान्त्यारिपतीनां च सम्बन्धो योगकारकः ॥ ६॥

कोणयोः सुखराज्येशौ कोणेशौ सुखराज्ययोः ।
स्वर्क्षं विना त्रिकेशानाः त्रिके वा योगकारकाः ॥ ७॥

शुभानामपि पापानां सम्बन्धश्चेत्परस्परम् ।
पापा योगप्रदास्तत्र नातियोगकराः शुभाः ॥८॥

त्रिके नीचग्रहाः श्रेष्ठा नीचस्था वा त्रिकाधिपाः ।
चतुष्टये तुङ्गखेटाः तुङ्गस्था वा तदीश्वराः ॥९॥

त्रिके चतुष्टयेशानाः स्थिताश्चेदल्पयोगदाः ।
विशेषेणाशुभाः पापाः त्रिकेशानाश्चतुष्टये ॥१०॥

द्रविणे वा व्ययाधीशो व्यये वा द्रविणाधिपः ।
परस्परं वा युक्तौ तौ ऽद्रविणव्ययकारकौ ॥११॥

मारकौ धनदारेशौ तत्संयुक्तौ विशेषतः ।
द्वितीयसप्तमस्थानस्थिता वा पापखेचराः ॥१२॥

सर्वेऽपि च दशानाथाः स्वसजातीयभुक्तिषु ।
जातकेभ्यः प्रयच्छन्ति शुभं वाप्यशुभं फलम् ॥१३॥

षष्ठेऽष्टमे दशानाथात् द्वादशे वा स्थितो ग्रहः ।
पापी चेदतिपापः स्यात् शुभश्चेन्नातिसौख्यकृत् ॥१४॥

नैसर्गिकशुभस्वामिसम्बन्धो भावपुष्टिकृत् ।
निसर्गपापसम्बन्धः कल्पते भावहानये ॥१५॥

केन्द्रकोणस्थितिर्भावपतेर्भावस्य वृद्धये ।
हानये त्रिकवर्त्तित्वं सम्बन्धे पूर्ववत्फलम् ॥ १६॥

सारभूतमिदं यस्तु श्लोकषोडशकं पठेत् ।
मनीषिणां स गोष्ठीषु दैवज्ञः किन्नु मुह्यति ॥ १७॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः कृतिः षोडशश्लोकी समाप्ता ॥



Kavyakantha Ganapati Muni and his Family
A Sketch by Madam Jane Adams

# त्रिभावफलचन्द्रिका

## प्रथमो मयूखः

सवितारं नमस्कृत्य सर्वखेचरनायकम् ।
केरलीयस्य शास्त्रस्य सारः सङ्गृह्यते मया ॥ १ ॥

आयुः कलत्रपुत्राणां क्रियतेऽत्र विचारणम् ।
विबुधैरितरे भावाः बोध्याः सामान्यशास्त्रतः ॥ २ ॥

सद्योरिष्टमरिष्टं च हीनं मध्यं च दीर्घकम् ।
अमितं चेति षोढायुर्हीनादित्रितये दशाः ॥ ३ ॥

सद्योरिष्टेप्यरिष्टे चाप्यमिते च तथायुषि ।
मारकस्यानपेक्ष्यैव दशां जीवितनिर्णयः ॥ ४ ॥

सद्योरिष्टारिष्टयोगान् वराहमिहिरोऽभणत् ।
अमितं सिद्धिसापेक्षमन्यत्रायमिहोच्यते ॥ ५ ॥

विलग्नजन्मराशीशौ पती तद्रन्ध्रयोरपि ।
शत्रू समौ वयस्यौ चेदल्पमध्यचिरायुषः ॥ ६ ॥

लग्नेशो रश्मिमाली च लग्नरन्ध्रांशपावपि ।
शत्रू समौ वयस्यौ चेदल्पमध्यचिरायुषः ॥ ७॥

बलवत्त्वं विलग्नेन्द्वोः सम्बन्धो द्विविधः शुभैः ।
लग्नजन्मेशयोर्वीर्यं तयोरेकादशस्थता ॥ ८॥

तयोः केन्द्रसंस्थितिश्च त्रिषडायेष्वसद्ग्रहाः ।
द्वितीयरन्ध्रकेन्द्रेषु कोणेषु च शुभस्थितिः ॥ ९॥

अमौढ्यं च गिरां भर्तुः आयुर्दैर्घ्यकरागुणाः ।
दुर्बलत्वं विलग्नेन्द्वोः पापदृष्टिसमागमौ ॥ १०॥

लग्नजन्मेशयोर्मौढ्यं स्थितिर्नीचव्ययारिषु ।
केन्द्रत्रिकोणरन्ध्रेषु पापखेचरसंस्थितिः ॥ ११॥

ग्रहेक्षितस्यामृतांशोः शत्रावायुषि वा स्थितिः ।
शुभानां वा त्रिभिः पापैः दृष्टानामष्टमे स्थितिः ॥ १२॥

राशिसन्धिषु चोत्पत्तिः आयुर्हानिकरा नृणाम् ।
सङ्कीर्णत्वे तु योगानां मध्यमायुर्विनिर्दिशेत् ॥ १३॥

दीर्घं मध्यमथाल्पं वा योगं निश्चित्य बुद्धिमान् ।
तत्रायुरन्तरे ब्रूयाद्दशायां हन्तुरापदम् ॥ १४॥

चन्द्रादष्टमराशीशः क्रूरदृक्काणपः शनिः ।
रन्ध्रगौलग्नचन्द्राभ्यां रन्ध्रस्यापि विलोककौ ॥ १५॥

गुलिकेशश्च राहुश्च मारकाः परिकीर्तिताः ।
तेषु यो दुर्बले दुष्टे भावेस्यात्तं विनिर्दिशेत् ॥ १६॥

दशावान्तर्दशावापि तस्य मृत्युप्रदा भवेत् ।
मारकश्चेच्छुभाधीशः तस्मादन्यं विनिर्दिशेत ॥ १७॥

देहे जीवे च पापस्य योगः स्यान्मरणप्रदः ।
शुभसम्बन्धहीनत्वे देहजीवदशागमे ॥ १८॥

जन्मराश्यन्वयष्वार्केः अल्पमध्यचिरायुषाम् ।
क्रमाद्विनिर्दिशेन्नृणां मरणं ग्रहचारतः ॥ १९॥

मन्दरन्ध्रेशयोरंशात् राशेर्वार्को त्रिकोणगे ।
अर्कारूढगृहस्यार्थरिष्फयोर्वा त्रिकोणगे ॥ २०॥

अंशलग्नाधिपाक्रान्तराशेर्जीवे त्रिकोणगे ।
कालहोराधिपाक्रान्तराशेर्वा मरणं नृणाम् ॥ २१॥

यो राशिः सूर्यजाक्रान्तः तद्धनस्य व्ययस्य वा ।
कोणे चरति वागीशे मरणं प्रवदेन्नृणाम् ॥ २२॥

राशेर्मन्दाधिरूढस्य तृतीयायात्मजारिषु ।
दृष्टिमान्मृतिदो जीवो यत्र क्वचन सञ्चरन् ॥ २३॥

अष्टमेशाश्रितं राशिं आवसत्यहिमत्विषि ।
जन्मतारां विलग्नस्थतारकां वा मृतिर्भवेत् ॥ २४॥

स्वांशाद्रन्ध्रेश्वरांशाच्च लग्नेशांशाच्चरादिषु ।
स्थितो जन्मनि तिग्मांशुः चरन्कोणे मृतिप्रदः ॥ २५॥

सूर्याश्रितर्क्षगे चन्द्रे रन्ध्रेशाधिष्ठितोडुगे ।
जन्मराशेस्त्रिकोणे वा निर्दिष्टं मरणं नृणाम् ॥ २६॥

धनेशाश्रितराशेर्वा तत्सप्तमगृहस्य वा ।
त्रिकोणस्थे धनेशांशचरे वा शीतगौमृतिः ॥ २७॥

निजजन्मनि यस्मिन्भे गुलिकस्तदृते विधौ ।
रोगारम्भस्तदस्तर्क्षे मरणं दृढमादिशेत् ॥ २८॥

मन्दजीवार्कचन्द्राणां प्रोक्तेष्वेतेषु राशिषु ।
मृतिमष्टकवर्गेण हीने राशौ समादिशेत् ॥ २९॥

विलग्नादष्टमे लग्ने रन्ध्रेशाश्रितभेऽपि वा ।
लग्नेशराश्यंशकयोः मृतिलग्नेऽथ वा मृतिः ॥ ३०॥

## अथ द्वितीयो मयूखः

अस्ततन्नाथतद्द्रष्टृतद्युक्तभृगुजादयः ।
साधनानि कलत्रस्य बलाबलनिरूपणे ॥ १ ॥

शुक्रास्तनाथतत्स्थानां सर्वेषामिह यो बली ।
भार्यायाः सम्भवन्तीह तस्य वर्णादयो गुणाः ॥ २ ॥

नवमे शुक्रसंयुक्ते कलत्रेशे बलान्विते ।
धर्मशीला भवेद्भार्या सपुत्रा भाग्यवत्यपि ॥ ३ ॥

पञ्चमे सप्तमे लाभे नवमे वा शुभग्रहाः ।
कलत्रभावतः प्रोक्ताः तद्भावबलहेतवः ॥ ४ ॥

दारेशे शुभसंयुक्ते शुभखेचरवीक्षिते ।
शुक्रे वा दारभावस्थे भवेत् भार्या पतिव्रता ॥ ५ ॥

भार्यावियोगो मर्त्यानां सप्तमस्थे धरासुते ।
चन्द्रमात्रेक्षितयुते निश्चयेन वधूमृतिः ॥ ६ ॥

नक्रस्थः सप्तमे जीवः कीटस्थः सप्तमे सितः ।
वृषस्थः सप्तमे चान्द्रिः शुभा अप्यशुभाः फले ॥ ७ ॥

रन्ध्रेशः पञ्चमेशो वा भवेद्यदि कलत्रगः ।
हन्यात्कलत्रं जातानां इति केरलनिर्णयः ॥ ८ ॥

